## ॥सूर्यास्तोत्रम्॥ / ॥आर्यास्तोत्रम्॥

शुकतुण्डच्छविसवितुश्चण्डरुचेः पुण्डरीकवनबन्धोः।
मण्डलमुदितं वन्दे कुण्डलमाखण्डलाशायाः ॥१॥

यस्योदयास्तसमये सुरमुकुटनिघृष्टचरणकमलो ऽपि।
कुरुतेऽञ्जलिं त्रिनेत्रः स जयति धाम्नां निधिः सूर्यः ॥२॥

उदयाचलतिलकाय प्रणतोऽस्मि विवस्वते ग्रहेशाय ।
अम्बर चूडामणये दिग्वनिताकर्णपूराय॥३॥

जयति जनानन्दकर करनिकरनिरस्ततिमिरसङ्घातः।
लोकालोकालोकःकमलारुणमण्डलः सूर्यः ॥४॥

प्रतिबोधितकमलवनः कृतघटनश्चक्रवाकमिथुनानाम्।
दर्शितसमस्तभुवनः परहितनिरतो रविः सदा जयति ॥५॥

अपनयतु सकलकलिकृतमलपटलं सुप्रतप्तकनकाभः ।
अरविन्दवृन्दविघटनपटुतरकिरणोत्करः सविता॥६॥

उदयाद्रिचा चामर हयखुर परिहितरे णुराग ।
हरितहय हरितपरिकर गगनाङ्गदीपक नमस्ते ऽस्तु ॥७॥

उादतवति त्वयि विकसति मुकुलीयति समस्तमस्तमितबिम्बे।
नान्यस्मिन दिनकरसकलं कमलायते भुवनम्॥८॥

जयति रविरुदयसमये बालातपः कनकसंनिभो यस्य।
कुसुमाञ्जलिरिव जलधौ तरन्ति रथसप्तयः सप्त ॥९॥

आर्या साम्बपुरे सप्त आकाशात् पतिता भुवि ।
यस्य कण्ठे गृहे वापि न स लक्ष्म्या वियुज्यते ॥१०॥

आर्या सप्त सदा यस्तु सप्तम्यां सप्तधा जपेत् ।
तस्य गेहं च देहं च पद्मा सत्यं न मुञ्चति ॥११॥

निधिरेष दरिद्राणां रोगिणां परमौषधम्।
सिद्धिः सकलकार्याणां गाथेयं संस्मृता रवेः॥१२॥

**॥समाप्तम् आर्यास्तोत्रम्॥**